# Shri Kalabhairavapancharatnastutih

# श्रीकालभैरवपञ्चरत्नस्तुतिः

## Sanskrit Document Information



Text title : kAlabhairavapancharatnastutiH

File name : kAlabhairavapancharatnastutiH.itx

Category : shiva, sachchidAnanda-shivAbhinava-nRisiMhabhAratI, pancharatna

Location : doc_shiva

Author : Sachchidananda Shivabhinava Nrisimha Bharati Swamigal

Proofread by : PSA Easwaran psawaswaran at gmail.com

Latest update : November 9, 2018

Send corrections to : Sanskrit@cheerful.com



November 10, 2018

*sanskritdocuments.org*

# श्रीकालभैरवपञ्चरत्नस्तुतिः



खड्गं कपालं डमरुं त्रिशूलं हस्ताम्बुजे सन्दधतं त्रिणेत्रम् ।
दिगम्बरं भस्मविभूषिताङ्गं नमाम्यहं भैरवमिन्दुचूडम् ॥ १॥

कवित्वदं सत्वरमेव मोदान्नतालये शम्भुमनोऽभिरामम् ।
नमामि यानीकृतसारमेयं भवाब्धिपारं गमयन्तमाशु ॥ २॥

जरादिदुःखौघविभेददक्षं विरागिसंसेव्यपदारविन्दम् ।
नराधिपत्वप्रदमाशु नन्त्रे सुराधिपं भैरवमानतोऽस्मि ॥ ३॥

शमादिसम्पत्प्रदमानतेभ्यो रमाधवाद्यर्चितपादपद्मम् ।
समाधिनिष्ठैस्तरसाधिगम्यं नमाम्यहं भैरवमादिनाथम् ॥ ४॥

गिरामगम्यं मनसोऽपि दूरं चराचरस्य प्रभवादिहेतुम् ।
कराक्षिपच्छून्यमथापि रम्यं परावरं भैरवमानतोऽस्मि ॥ ५॥

इति शृङ्गेरि श्रीजगद्गुरु श्रीसच्चिदानन्दशिवाभिनवनृसिंह-
भारतीस्वामिभिः विरचिता श्रीकालभैरवपञ्चरत्नस्तुतिः सम्पूर्णा ।

Proofread by PSA Easwaran psaeaswaran at gmail.com

*Shri Kalabhairavapancharatnastutih*

pdf was typeset on November 10, 2018

Please send corrections to *sanskrit@cheerful.com*

